प्छंदः । पर्जन्यो देवता । वृष्टिप्राप्त्यर्थे विनियोगः ॥ "ॐ तिस्रो वाचः प्रवद्ज्योतिरग्राया एतद्दुह्रेमधुदोघमूधः ॥ सवत्सं कृण्वन् गर्भमोषधीनां सद्योजातो वृषभो रोरवीति ॥ १ ॥ योवर्धनओषधीनांयोअपांयोविश्वस्यजगतोदेवईशे ॥ सत्रिधातुशरणं शर्मयंसत्त्रिवर्तुज्योतिः स्वभिष्ट्य १ स्मे ॥ २ ॥ स्तरीरुत्वद्भवतिसूतउत्वद्यथावशंतन्वंचक्रएषः । पितुःपयः प्रतिगृभ्णातिमातातेन पितावर्धतेतेनपुत्रः ॥ ३ ॥ यस्मिन्विश्वानिभुवनानितस्थुस्तिस्रोद्यावस्त्रेधासस्रुरापः ॥ त्रयः कोशासउपसेचनासोमध्वश्चोतन्त्यभि तोविरप्शम् ॥ ४ ॥ इदं वचः पर्जन्यायस्वराजेहृदोअस्त्वन्तरंतज्जुजोषत् ॥ मयोभुवोवृष्टयः सन्त्वस्मेसुपिप्पलाओषधीर्देवगोपाः ॥ ५ ॥ पुरेतोधावृषभःशश्वतीनांतस्मिन्नात्माजगतस्तस्थुषश्च । तन्मऋतं पातु शतशारदाययूयंपातस्वस्तिभिः सदानः ॥ ६ ॥" इति प्रथमसूक्तम् ॥ "ॐ पर्जन्यायेति सूक्तस्य अग्निपुत्रः कुमार ऋषिः वसिष्ठो वा । गायत्री छन्दः । पर्जन्यो देवता । वृष्टिप्राप्त्यर्थे जपे विनियोगः । ॐ पर्जन्यायप्रगायतदिवस्पुत्रायमीढुषे । सनोयवसमिच्छतु ॥ १ ॥ योगर्भमोषधीनांगवांकृणोत्यर्वताम् ॥ पर्जन्यः पुरुषीणाम् ॥ २ ॥ तस्माइदास्येहविर्जुहोतामधुमत्तमम् ॥ इलांनः संयतं करत् ॥ ३ ॥" इति वृष्टिप्राप्तिकरविधानम् ॥अथ सर्वरोग नाशकधर्मराजमंत्रविधानम् ॥ ( मन्त्रमहोदधौ ) मंत्रो यथा । "ॐक्रौंह्रींआंवैंवैवस्वताय धर्मराजाय भक्तानुग्रहकृते नमः" इति चतुर्विंशतिवर्णो मन्त्रः । नास्य ऋष्यादिपूजाविधानं सिद्धमंत्रत्वादिति । ॐक्रौं ह्रीं हृदयाय नमः॥१॥ॐआं वैं शिरसे स्वाहा ॥२॥

ॐ वैवस्वताय वषट् ॥ ३ ॥ ॐ धर्मराजाय कवचाय हुं ॥४॥ ॐ भक्तानुग्रहकृते नेत्रत्रयाय वौषट् ॥५॥ ॐ नमः अस्त्राय फट् ॥६॥ इति षडंगन्यासं कृत्वा ध्यायेत् ॥ अथ ध्यानम् " पाथःसंयुतमेघसन्निभतनुः प्रद्योतनस्यात्मजो नृणां पुण्यकृतां शुभावहवपुः पापीयसां दुःखकृत् ॥ श्रीमद्दक्षिणदिक्पतिर्महिषगोभूषाभरालंकृतो ध्येयः संयमनीपतिः पितृगणस्वामी यमो दंडभृत् ॥ १ ॥" अभ्यस्तोऽयं सदा मंत्रः सकलापद्विनाशनः ॥ नरकप्राप्तिरोद्धा स्याद्रिपुभीतिनिवर्तकः ॥ २ ॥ इति धर्मराजमंत्रानुष्ठानम् ॥ अथ चित्रगुप्तमन्त्रानुष्ठानम् । ( तत्रैव ) मंत्रो यथा—ॐ नमोविचित्रायधर्मलेखकाययमवाहिकाधिकारिणेम्ल्व्यूंजन्मसंपत्प्रलयंकथय कथयस्वाहा" इत्यष्टात्रिंशदक्षरो मन्त्रः॥ ( अस्य ऋष्यादिन्यासपूजाऽभावः सिद्धमन्त्रत्वात् ) ॐनमो विचित्राय हृदयाय नमः॥१॥ ॥ १ ॥ ॐ धर्मलेखकाय शिरसे स्वाहा ॥ २ ॥ ॐ यमवाहिकाधिकारिणे शिखायै वषट् ॥ ३ ॥ ॐ म्ल्व्यूंजन्मसंपत्प्रलयंकव चाय हुं ॥ ४ ॥ ॐ कथयकथय नेत्रत्रयाय वौषट् ॥ ५ ॥ ॐ स्वाहा इत्यस्त्राय फट् ॥ ६ ॥ इति षडंगन्यासं कृत्वा ध्यायेत् । किरीटोज्ज्वलं वस्त्रभूषाभिरामं विचित्रासनासीनमिन्दुप्रभास्यम् ॥ नृणां पापपुण्यानि पत्रे लिखन्तं भजे चित्रगुप्तं सखायं यमस्य ॥ १ ॥ सिद्धमन्त्रमिमं पुंसां जपतां चित्रगुप्तकः ॥ प्रसन्नो गणयेत्पुण्यं नैव पापं कदाचन ॥ २ ॥ इति चित्रगुप्तमन्त्रविधानम् ॥ अथ ग्रंथालंकारः ॥ देशे मनोज्ञे हि मरौ बभूव वीकोजिनामा नृपतिः पुरा हि ॥ तस्यैव नाम्ना खलु राजधानी लोके विकानेर इति

प्रथांगता ॥ १ ॥ तदन्तरे शक्रपुरोपमे पुरं श्रीरत्नदुर्गे सुजनैः सुसेविते ॥ आसीद्वसिष्ठान्वयगौडविप्रो माध्यंदिनीयो बुधजीवराजः ॥
॥ २ ॥ तस्यात्मजा बाणमितास्तु सद्गुणाः सुवेदविद्याऽध्ययने च नैपुणाः ॥ आयातयाताद्विजशुद्धप्राज्ञणा वीर्येण संताडितवैरि
दुर्गणाः ॥ ३ ॥ एतेषु मध्ये खलु रामकृष्णो ज्ञानेन स्वल्पीकृतसर्वतृष्णः ॥ स्वबुद्धितः खण्डितवैरिप्रश्नः सुभक्तिसंतर्पितदेव
कृष्णः ॥ ४ ॥ तस्याऽभवन्नामसिताः सुपुत्राः स्वधर्म्मयायिस्वकलत्रमित्राः ॥ गृहेषु संलेखितरम्यचित्राः श्रीकान्तपूजानिरताः
पवित्राः ॥ ५ ॥ इमानि नामानि भवन्ति तेषां चतुर्भुजाख्यो विबुधोऽयमाद्यः ॥ कस्तूरिचन्द्राभिधसज्जनोऽपरोऽपरोगुणैर्मंडि
तजेष्ठरामः ॥ ६ ॥ स जेष्ठरामः खलुपंडिताग्र्यः षट्शास्त्रवेत्ता द्विजकर्म्मतत्परः ॥ त्यागी मनस्वी द्विजदेवभक्तो हुतावशिष्टा
न्नसदानुरक्तः ॥ ७ ॥ तत्रापि मध्यो निजवंशपालकः कस्तूरिचन्द्राख्यमहत्सुशीलः ॥ तस्मात्सुपुत्रावनवद्यवंद्यविद्यान्वितौ द्वौ
नितरामभूताम् ॥ ८ ॥ चतुर्थीलालाख्यगुरुसुखाख्यौ सुज्ञौ गुणाढ्यौ निजधर्मतत्परौ ॥ ज्येष्ठस्तयोर्वै खलु पण्डिताग्रणीः
षट्शास्त्रवेत्ता शिवपूजने रतः ॥ ९ ॥ षट्कर्माभिरतो नित्यं देवतातिथिपूजकः ॥ हुतशेषं तु भुञ्जानश्चतुर्थीलालपंडितः ॥ १० ॥
मातामहो यस्य बभूव पंडितः श्रीरामनामा प्रथितः स्वदेशे ॥ दाता वदान्यो धनिभिश्च वंद्यो भिषक्सुवृत्त्या परिपूर्णकोशः ॥ ११ ॥
एतादृशे शुद्धकुले विशाले चतुर्थीलालो हि बभूव चन्द्रमाः ॥ परोपकारी निजवंशकेतुः शिष्टानुरागी च निबन्धकर्त्ता ॥ १२ ॥

यस्य माता हरीबाई पिता कस्तूरिचन्द्रकः ॥ यथाऽनसूया साध्वी सा यथाऽत्रिस्स तथा खलु ॥ १३ ॥ सूत्रं कात्यायनं यस्य शाखा माध्यंदिनीयिका ॥ श्रीवसिष्ठकुलं यस्य स चतुर्थ्याख्यपंडितः ॥ १४ ॥ तेनायं रचितो ग्रन्थो गौडानां प्रीतिदः सदा ॥ अनेन प्रीयतां शम्भुर्भवान्या सह सर्वदा ॥ १५ ॥ व्योमशास्त्राङ्कचन्द्रेऽब्दे १९६० विक्रमादित्यसंज्ञके ॥ फाल्गुने शुक्लपञ्चम्यां ग्रन्थः पूर्णोऽभवच्छिवः ॥ १६ ॥ इति श्रीमन्महाराजाधिराजक्षत्रियकुलार्कमरुदेशाधिपतिराजेंद्रश्रीगङ्गासिंहवर्मणो बीकानेर राज्यान्तर्गत-श्रीरत्नगढनगरनिवासिना श्रीवसिष्ठगोत्रोद्भवगौडवंशावतंसपंडितश्रीरामकृष्णामरचन्द्रपौत्रेण श्रीकस्तूरिचंद्रात्मजेन श्रीचतुर्भुजदत्तसूनुना श्रीमहादेवभक्तशुक्लयजुर्वेदीयमाध्यंदिनवाजसनेयिना पंडितश्रीचतुर्थीलालशर्मणा विरचिते अनुष्ठानप्रकाशे अद्भुते महानिबन्धे पुरश्चरणकाण्डे रोगशमनविधानप्रकरणं षष्ठम् ॥

( ॥ समाप्तोऽयं महानिबंधः षष्ठः ॥ )



इदं पुस्तकं मुम्बय्यां श्रीकृष्णदासात्मज-क्षेमराजेन श्रेष्ठिना, स्वकीये-"श्रीवेङ्कटेश्वर" स्टीम्-मुद्रण-यन्त्रालये, मुद्रयित्वा प्रकाशितम्।

संवत् १९९१, शके १८५६.

पुस्तक मिलनेका ठिकाना-

| | |
|---|---|
| खेमराज श्रीकृष्णदास, | गङ्गाविष्णु श्रीकृष्णदास, |
| "श्रीवेङ्कटेश्वर" स्टीम्-प्रेस, | "लक्ष्मीवेङ्कटेश्वर" स्टीम्-प्रेस, |
| बम्बई. | कल्याण-बम्बई. |

